सान्तर्हासं कथितमसकृत् पृच्छतश्च त्वया मे
दृष्टः स्वप्ने कितव! रमयन् कामपि त्वं मयेति ॥

भूय इति । भूयश्चाह इति पाठः । भूयश्चाह पुनरपि मन्मुखेनाहेत्यर्थः। मन्मुखेनेदमाह इत्युक्तत्वात् । त्वमसीति पाठः । सस्वरं सशब्दम्। कितव! धूर्त!। अयमर्थः—निद्रासमये रुदित्वा सशब्दं प्रबुद्धासि। किमिति बहुशः पृच्छतो मे कितव! स्वप्ने त्वं कामपि रमयन् मया दृष्ट इति सान्तर्हासं पुरा त्वया कथितमिति ते प्रियतमो भूयश्च मन्मुखेनेदमभिज्ञानमाहेति ॥ ४४ ॥

एतस्मान्मां कुशलिनमभिज्ञानदानाद् विदित्वा
मा कौलीनादसितनयने! मय्यविश्वासिनी भूः।
स्नेहानाहुः किमपि विरहे ह्रासिनस्ते ह्यभोगा-
दिष्टे वस्तुन्युपचितरसाः प्रेमराशीभवन्ति ॥ ४५ ॥

एतस्मादिति । अभिज्ञानदानाद् अभिज्ञानस्य वाचा प्रदानात्। कौलीनाल्लोकवादाद्, एतावता कालेन तव भर्ता परासुः स्यान्नो चेदागमिष्यतीति जनवादादित्यर्थः। असितनयने!, इदमप्यभिज्ञानम्। कौलीनान्मय्यविश्वासिनी मा भूः इत्यर्थः । एतावन्तं कालं विरहितयोरावयोः स्नेहा विगलन्तीत्याह—स्नेहानाहुः किमपि विरहे ह्रासिन इति । स्नेहान् विरहे ह्रासिन इत्याहुः । तत् किमपि किञ्चिदतितुच्छमित्यर्थः । प्रत्युत स्नेहा विरहे वर्धन्ते इति स्वमतेनाह—ते ह्यभोगादिति। अभोगाद् भोगालाभात्। वस्तुनि प्रयोजनादिविषये। उपचितरसा उपचितशृङ्गारादिरसाः। ते स्नेहाः इष्टे वस्तुनि भोगालाभादेव उपचितरसाः प्रेमराशीभवन्तीत्यर्थः । ननु 'प्रेमा ना प्रियता हार्दम्' इत्यमरसिंहवचनात् प्रेमस्नेहयोरैक्यं प्रतीयते। कथं तयोर्भेदवचनमिति। उच्यते । स्नेहादन्यत् प्रेम । यथाहुरलङ्कारविदः—



"अवलोकनाभिलाषौ रागस्नेहौ ततः प्रेम।
रतिशृङ्गारौ योगे वियोगगतो विप्रलम्भश्च ॥"

इति ॥ ४५ ॥

[आश्वास्यैवं प्रथमविरहोदग्रशोकां सखीं ते
शैलादाशु त्रिनयनवृषोत्खातकूटान्निवृत्तः।
साभिज्ञानप्रहितकुशलैस्तद्वचोभिर्ममापि
प्रातः कुन्दप्रसवशिथिलं जीवितं धारयेथाः ॥]

इदानीं मेघं स्तौति —

कच्चित् सौम्य! व्यवसितमिदं बन्धुकृत्यं त्वया मे
प्रत्यादेशान्न खलु भवतो धीरतां कल्पयामि ।
निश्शब्दोऽपि प्रदिशसि जलं याचितश्चातकेभ्यः
प्रत्युक्तं हि प्रणयिषु सतामीप्सितार्थक्रियैव ॥ ४६ ॥

कच्चिदिति । इदं बन्धुकृत्यं त्वया व्यवसितं कच्चिदित्यन्वयः । अहं करिष्यामीति प्रत्युत्तरं न ब्रूषे । तथाप्यन्येषामिव प्रत्युत्तरप्रदानात् तव धैर्यं न कल्पयामीत्याह — प्रत्यादेशादिति । आदेशो वचनं, प्रत्यादेशः प्रतिवचनम् इत्युत्तरं विनापि भवतो धीरतां कल्पयामीत्यभिप्रायः । यद्यपि प्रत्यादेशशब्दः प्रत्याख्यानवचनः, तथाप्यत्र प्रतिवचनवाचको भवति प्रत्युक्तमिति वक्ष्यमाणत्वात् । उक्तमर्थमुपपादयति — निश्शब्दोऽपीति । अनेन निरुत्तरत्वं विवक्षितम् । प्रत्युक्तं प्रतिवचनम्। प्रणयिषु प्रार्थयमानेषु। सतामुत्तमानाम् । ईप्सितार्थक्रिया ईप्सितार्थसम्पादनम् । प्रणयिषु ईप्सितार्थादनतिवृत्तिरेव प्रतिवचनं भवतीत्यर्थः ॥ ४६ ॥

एतत् कृत्वा प्रियमनुचितप्रार्थनावर्त्मनो मे
सौहार्दाद् वा विधुर इति वा मय्यनुक्रोशबुद्ध्या ।

इष्टान् देशान् विचर जलद! प्रावृषा संभृतश्री-
र्मा भूदेवं क्षणमपि च ते विद्युता विप्रयोगः ॥ ४७ ॥

एतादिति। अनुचितप्रार्थनावर्त्मनः भवतः प्राधान्यमनादृत्य मत्प्रियायै सन्देशं हरेत्येवमनुचितप्रार्थनाप्रकारस्य। सौहार्दाद् वा एतावन्तं कालमाभाषणादिजनितात् सुहृद्भावादित्यर्थः। उक्तं च — 'सम्बन्धमाभाषणपूर्वमाहुः' इति। विधुर इति वा। विधुरः प्रियाविश्लिष्टः। मयि विधुर इत्यनुग्रहबुद्ध्या वेत्यर्थः। विचर, विपूर्वश्चरतिः सकर्मको भवति। 'अधिज्यधन्वा विचचार दावम्' इत्युक्तत्वात्। प्रावृषा संभृतश्रीः वर्षाकालेन संभृतशोभः। अयमत्र समाधिः — कश्चित् पथिको देशान्तराणि गच्छन् कयापि दास्या संभृतार्थो भवतीति। एवं मम वियोगप्रकारेण। तव विद्युता विप्रयोगो मा भूदिति देशान्तरगमनात् पथिकायमानस्य भवतः क्षणमपि मम कान्तयेव विद्युता विप्रयोगो मा भूदित्यभिप्रायः ॥ ४७ ॥

इति श्रीदाक्षिणावर्तनाथविरचितो
मेघसन्देशप्रदीपः समाप्तः।

---

शुभं भूयात् ॥